श्रीगणेशाय नमः ॥ ॥ अथ नवग्रहस्तोत्र-
प्रारम्भः ॥ जपाकुसुमसङ्काशं काश्यपेयं
महाद्युतिम्॥ तमोरिं सर्वपापघ्नं प्रणतोऽस्मि
दिवाकरम् ॥१॥ दधिशंखतुषाराभं क्षीरो-
दार्णवसंभवम् ॥ नमामि शशिनं सोमं
शम्भोर्मुकुटभूषणम् ॥२॥ धरणीगर्भसंभूतं
विद्युत्कान्तिसमप्रभम् ॥ कुमारं शक्तिहस्तं
तं मङ्गलं प्रणमाम्यहम्॥३॥ प्रियङ्गुकलिका-

श्यामं रूपेणाप्रतिमं बुधम् ॥ सौम्यं सौम्य
गुणोपेतं तं बुधं प्रणमाम्यहम् ॥४॥ देवानां च
ऋषीणां च गुरुं काञ्चनसंनिभम् ॥ बुद्धिभूतं
त्रिलोकेशं तं नमामि बृहस्पतिम् ॥ ५ ॥
हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम् ॥
सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम् ॥६॥
नीलाञ्जनसमाभासं रविपुत्रं यमाग्रजम् ॥
छायामार्तण्डसंभूतं तं नमामि शनैश्चरम् ॥७॥

अर्धकायंमहावीर्यंचन्द्रादित्यविमर्दनम् ॥
सिंहिकागर्भसंभूतं तं राहुं प्रणमाम्यहम्॥८॥
पलाशपुष्पसङ्काशं तारकाग्रहमस्तकम् ॥
रौद्रं रौद्रात्मकं घोर तं केतुं प्रणमाम्यहम्
॥९॥ इति व्यासमुखोद्गीतं यः पठेत सुसमा-
हितः॥ दिवा वा यदि वा रात्रौ विघ्नशान्ति-
र्भविष्यति ॥ १० ॥ नरनारीनृपाणां च
भवेद्दुःस्वप्ननाशनम्॥ ऐश्वर्यमतुलं तेषामा-

रोग्यं पुष्टिवर्द्धनम् ॥ ११ ॥ ग्रहनक्षत्रजाः
पीडास्तस्कराग्निसमुद्भवाः॥ ताः सर्वाः प्रशमं
यान्ति व्यासो ब्रूते न संशयः ॥१२॥ इति
श्रीव्यासविरचितं आदित्यादिनवग्रहस्तोत्रं
सम्पूर्णम् ॥ श्रीआदित्यादिनवग्रहार्प० ॥
श्रीगणेशाय नमः॥ अथ विष्णुपञ्जरस्तोत्र-
प्रारम्भः ॥ ॐ अस्य श्रीविष्णुपञ्जरस्तोत्र
मन्त्रस्य॥ नारदऋषिः॥ अनुष्टुप् छन्दः॥

श्रीविष्णुः परमात्मा देवता॥ अहं बीजम्॥
सोहं शक्तिः॥ ॐ ह्रीं कीलकम्॥मम सर्व-
देहरक्षणार्थे जपे विनियोगः॥ नारदऋषये
नमः शिरसि॥ अनुष्टुप् छन्दसे नमः मुखे॥
श्रीविष्णुपरमात्मदेवतायै नमः हृदये॥ अहं
बीजं गुह्ये॥ सोहं शक्तिः पादयोः॥ ॐ ह्रीं
कीलकं पादाग्रे॥ ॐ ह्रांह्रींह्रूंह्रैंह्रौंह्रः इति
मन्त्रः॥ ॐ ह्रां अंगुष्ठाभ्यां नमः॥ ॐ ह्रीं

तर्जनीभ्यां नमः॥ ॐ ह्रूं मध्यमाभ्यां नमः॥ ॐ ह्रैं अनामिकाभ्यां नमः॥ ॐ ह्रौं कनिष्ठिकाभ्यां नमः॥ ॐ ह्रः करतलकरपृष्ठाभ्यां नमः ॥ इति करन्यासः ॥ ॐ ह्रां हृदयाय नमः ॐ ह्रीं शिरसे स्वाहा॥ ॐ ह्रूं शिखायै वषट्॥ ॐ ह्रैं कवचाय हुं॥ ॐ ह्रौं नेत्रत्रयाय वौषट् ॥ ॐ ह्रः अस्त्राय फट् ॥ ॥ इति अङ्गन्यासः ॥ ॥ अर्हं बीजं प्राणायामं

मन्त्रत्रयेण कुर्यात्॥ अथ ध्यानम्॥ ॥ परं परस्मात्प्रकृतेरनादिमेकं निविष्टं बहुधा गुहायाम्॥ सर्वालयं सर्वचराचरस्थं नमामि विष्णुं जगदेकनाथम्॥१॥ ॐ विष्णुपञ्जरकं दिव्यं सर्वदुष्टनिवारणम्॥ उग्रतेजोमहावीर्यं सर्वशत्रुनिकृन्तनम्॥२॥ त्रिपुरं दह्यमानस्य हरस्यब्रह्मणोदितम ॥ तदहंसंप्रवक्ष्यामि आत्मरक्षाकरं नृणाम्॥ ३ ॥ पादौ रक्षतु

गोविन्दो जङ्घे चैव त्रिविक्रमः ॥ ऊरू मे
केशवः पातु कटिं चैव जनार्द्दनः ॥ ४ ॥
नाभिं चैवाच्युतः पातु गुह्यं चैव तु वामनः॥
उदरं पद्मनाभश्च पृष्ठं चैव तु माधवः ॥५॥
वामपार्श्वे स्थितो विष्णुर्दक्षिणे मधुसूदनः॥
बाह्वोर्वै वासुदेवश्च हृदि दामोदरस्तथा ॥६॥
कण्ठं रक्षतु वाराहः कृष्णश्च मुखमण्डले ॥
माधवः कर्णमूले तु हृषीकेशश्च नासिके॥७॥

—

नेत्रे नारायणो रक्षेल्ललाटे गरुडध्वजः ॥
कपोलौ केशवोरक्षेद्वैकुंठःसर्वतो दिशम्॥८॥
श्रीवत्साङ्कश्च सर्वेषामङ्गानां भवरक्षकः ॥
पूर्वस्यां पुण्डरीकाक्ष आग्नेय्यां श्रीधरस्तथा
॥९॥दक्षिणे नरसिंहश्च नैर्ऋत्यां माधवोवतु॥
पुरुषोत्तमो मे वारुण्यां वायव्यां च जनार्दनः
॥१०॥ गदाधरस्तु कौबेर्यामीशान्यां पातु
केशवः ॥ आकाशे च गदा पातु पाताले च

सुदर्शनम् ॥११॥ सनद्धः सर्वगात्रेषु प्रविष्टो विष्णुपञ्जरः॥ विष्णुपञ्जरविष्टोहं विचरामि महीतले ॥१२॥ राजद्वारे पथे घोरे संग्रामे शत्रुसङ्कटे ॥ नदीषु च रणे चैव चोरव्याघ्र भयेषु च॥१३॥ डाकिनीप्रेतभूतेषु भयं तस्य न जायते॥ रक्ष रक्ष महादेव रक्ष रक्ष जनेश्वर ॥ १४ ॥ रक्षन्तु देवताः सर्वा ब्रह्मविष्णु महेश्वराः ॥ जले रक्षतु वाराहः स्थले रक्षतु

माधवः ॥१५॥ अटव्यां नारसिंहश्च सर्वतः पातु केशवः ॥ दिवा रक्षतु मां सूर्यो रात्रौ रक्षतु चन्द्रमाः ॥ १६ ॥ पन्थानं दुर्गमं रक्षेत्सर्वमेव जनार्दनः ॥ रोगविघ्नहतश्चैव ब्रह्महा गुरुतल्पगः॥१७॥स्त्रीहन्ता बालघाती च सुरापी वृषलापतिः॥ मुच्यते सर्वपापेभ्यो यः पठेन्नात्र संशयः॥१८॥ अपुत्रो लभते पुत्रं धनार्थी लभते धनम्॥ विद्यार्थी लभते विद्यां

मोक्षार्थी लभते गतिम् ॥१९॥ आपदो हरते नित्यं विष्णुस्तोत्रार्थसम्पदा ॥ यस्त्विदं पठते स्तोत्रं विष्णुपञ्जरमुत्तमम् ॥ २० ॥ मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति॥ गोसहस्रफलं तस्य वाजपेयशतानि च॥२१॥ अश्वमेधसहस्रेण फलं प्राप्नोति मानवः ॥ सर्वकामं लभेदस्य पठनान्नात्र न संशयः ॥ २२ ॥ जले विष्णुः स्थले विष्णुर्विष्णुः

—

पर्वतमस्तके॥ ज्वालामालाकुले विष्णुः सर्वं विष्णुमयं जगत् ॥२३॥ इति श्रीब्रह्माण्ड-पुराणे इन्द्रनारदसंवादे श्रीविष्णुपञ्जरस्तोत्रं सम्पूर्णम् ॥ ॥

## पुस्तकें मिलने के स्थान

१) खेमराज श्रीकृष्णदास,
श्रीवेंकटेश्वर स्टीम प्रेस,
खेमराज श्रीकृष्णदास मार्ग,
खेतवाडी, मुंबई - ४०० ००४.

२) खेमराज श्रीकृष्णदास,
६६, हडपसर इण्डस्ट्रिअल इस्टेट
पुणे - ४११ ०१३.

३) गंगाविष्णु श्रीकृष्णदास
लक्ष्मीवेंकटेश्वर स्टीम प्रेस,
व बुक डिपो,
अहिल्याबाई चौक, कल्याण
(जि. ठाणे - महाराष्ट्र)

४) खेमराज श्रीकृष्णदास,
चौक - वाराणसी (उ.प्र.)